# ॥ श्रीवैष्णवविशिष्टसन्ध्यावन्दनविधिः ॥

# ॥ श्रीवैष्णवविशिष्टसन्ध्यावन्दनविधिः ॥

पवित्रासने शुद्धभूमावुपविष्य शुद्धजले तुलसीं निक्षिप्य

**“ॐ विं विरजायै नमः”** इत्युच्चार्य

श्वेततिलकं हस्ते घर्षणम्

तत्र मन्त्रः

**ॐ विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानिविममे रजा ७ सि ।**

**योऽअस्कभा यदुत्तर ॰ सधस्थं विचक्रमाणस्त्रेधोरुगाय॥**

ततो मध्ये ॐ विलिख्य ततः परितः षट्कोणं विलिख्य मूलेन मन्त्रेण अभिमन्त्र्य विष्णुगायत्र्या तर्जन्या अङ्गुल्या ललाटे धारयेत्

तत्र श्वेततिलकधारणमन्त्रः

**ॐ नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात् ॥**

॥ द्वादशकेशवादिनामभिर्द्वादशतिलकधारणम् ॥

**ॐ केशवाय नमः इति ललाटे**

**ॐ नारायणाय नमः इति मध्योदरे**

**ॐ माधवाय नमः इति वक्षस्थले**

**ॐ गोविन्दाय नमः इति मध्यकण्ठे**

**ॐ विष्णवे नमः इति दक्षिणोदरे**

**ॐ मधुसुदनाय नमः दक्षिणबाहौ**

**ॐ त्रिविक्रमाय नमः इति दक्षिणकण्ठे**

**ॐ वामनाय नम: इति वामोदरे**

**ॐ श्रीधराय नमः इति वामबाहौ**

**ॐ हृषिकेशाय नमः वामकण्डे**

**ॐ पद्मनाभाय नमः कण्ठपृष्ठे**

**ॐ दामोदराय नम: त्रिकस्थाने**

श्वेततिलकं धारयेत्

पश्चात्

अवशेषतिलकं हस्तं प्रक्षाल्य "**ॐ वासुदेवाय नमः**" इत्युच्चार्य शिरसि धारयेत् वा शुद्धवाससि ।

ततः श्रीचूर्णं हस्ते घर्षणम्

तत्र मन्त्रः

**ॐ गन्धद्वारां दुराधर्षांन्नित्यपुष्टां करीषिणीम् ।**

**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥**

इति घर्षयित्वा श्रीं विलिख्य दशवारं श्रीं श्रियै नमः इत्यनेन मन्त्रेणाभिमन्त्रणं कृत्वा लक्ष्मीगायत्र्या

**ॐ महालक्ष्म्यै च विद्महे विष्णुपत्न्यै च धीमहि तन्नो लक्ष्मीः प्रचोदयात् ॥**

वा

**ॐ श्रीं श्रियै नमः** इत्युच्चार्य ललाटे धारयेत् ।

॥ द्वादशश्र्यादिवादिनामभिर्द्वादशस्थानाङ्गे श्रीचूर्णधारणम् ॥

ॐ श्रीं श्रियै नमः इति ललाटे

ॐ अमृतोद्भवायै नम: इति मध्योदरे

ॐ कमलायै नमः इति वक्षस्थले

ॐ चन्द्रसहोदर्यै नमः इति मध्यकण्ठे

ॐ विष्णुपत्न्यै नमः इति दक्षिणोदरे

ॐ वैष्णव्यै नमः दक्षिणबाहौ

ॐ वरारोहायै नमः इति दक्षिणकण्ठे

ॐ हरिवल्लभायै नम: इति वामोदरे

ॐ शार्ङ्गिण्यै नमः इति वामबाहौ

ॐ देवदेविकायै नमः वामकण्डे

ॐ लोकसौन्दर्यै नमः कण्ठपृष्ठे

ॐ महालक्ष्म्यै नम: त्रिकस्थाने श्रीचूर्णम् धारयेत्

पश्चात् अवशेषं श्रीचूर्णं हस्तं प्रक्षाल्य **ॐ महालक्ष्म्यै नमः** इत्युच्चार्य शिरसि वा शुद्धवाससि धारयेत् ।

ततः श्रीवाक्यगुरुपरम्परां श्लोकगुरुपरम्पराञ्च उच्चार्य श्रीपादतीर्थञ्च स्वीकृत्य आचमेत्

**द्वादशकेशवादिनामभिर्द्वादशन्यासङ्कुर्यात् ।**

ॐ केशवाय नमः तर्जन्यङ्गुष्ठाभ्यां दक्षिणकपोले स्पृशेत्

ॐ नारायणाय नमः तर्जन्यङ्गुष्ठाभ्यां वामकपोले स्पृशेत्

ॐ माधवाय नमः  अङ्गुष्ठामध्यमाभ्यां दक्षिणनासापुटे स्पृशेत्

ॐ गोविन्दाय नमः अङ्गुष्ठामध्यमाभ्यां वामनासापुटे स्पृशेत्

ॐ विष्णवे नमः  अङ्गुष्ठातर्जनीभ्यां दक्षिणनेत्रे स्पृशेत्

ॐ मधुसूदनाय नमः अङ्गुष्ठातर्जनीभ्यां वामनेत्रे स्पृशेत्

ॐ त्रिविक्रमाय नमः अङ्गुष्ठाकनिष्ठिकाभ्यां  दक्षिणकर्णे स्पृशेत्

ॐ वामनाय नमः अङ्गुष्ठाकनिष्ठिकाभ्यां वामकर्णे स्पृशेत

ॐ श्रीधराय नमः अङ्गुष्ठामध्यमाभ्यां दक्षिणस्कन्धे स्पृशेत्

ॐ हृषीकेशाय नमः अङ्गुष्ठामध्यमाभ्यां वामस्कन्धे स्पृशेत्

ॐ पद्मनाभाय नमः अङ्गुष्ठां विहाय चतुरङ्गुलिभिः नाभौ स्पृशेत्

ॐ दामोदराय नमः पञ्चभिः अङ्गुलिभिः सिरसि स्पृशेत्

# तत आचमनम्

ॐ अच्युताय नमः ॐ अनन्ताय नमः ॐ गोविन्दाय नमः
इति त्रिभिर्मन्त्रैः त्रिबारं आचम्य ॐ विष्णवे नमः इति हस्तं प्रक्षालनम् कुर्यात्

## संकल्पं कुर्यात्

**हरिः ॐ तत्सत् हरिः ॐ तत्सत् हरिः ॐ तत्सत् ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य श्रीविष्णोराज्ञया प्रवर्तमानस्य सकलजगत्सृष्टिकारिणो ब्रह्मणोद्वितीये परार्द्ध श्रीश्वेत वाराहकल्पे वैवस्वतमन्वन्तरेऽष्टाविंशतितमे कलियुगे कलियुगस्य प्रथमचरणे श्रीमद्भगवद्रामानुजमुनिप्रादुर्भावात् श्रीमन्नृपति विक्रमाात् वा अमुकसंवत्सरे अमुकायने अमुकऋतौ अमुकमासे अमुकपक्षे अमुकवासरे अमुकतिथौ अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते श्रीसूर्ये चन्द्र देवगुरौ शेषेषु ग्रहेषु यथायथा स्थानस्थितेषु सत्सु एवं गुणगणविशेषेण विशिष्टायां शुभपुण्यतिथौ अमुकगोत्रोपन्न अमुकप्रवरान्वित अमुकनामोऽहं भगवदाज्ञया भगवन्मुखोल्लासार्थं अमुकसन्ध्योपासनमहं करिष्ये ।**

सर्वाङ्गं कुशैर्मार्जनं कुर्यात्

**ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोपिवा ।**

**यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥**

आसनशुद्धिं कुर्यात्

**विनियोगः**

पृथ्वीतिमन्त्रस्य मेरुपृष्ठर्षिः सुतलं छन्दः कूर्मो देवता आसने विनियोगः ।

**ॐ पृथ्वि त्वया धृतालोका देवि त्वं विष्णुना धृता ॥**
**त्वञ्च धारय मां देवि पवित्रं कुरु चासनम् ॥**

## प्राणायामः

## विनियोगः

ॐ कारस्य ब्रह्माऋषिर्गायत्रीछन्दोग्निर्देवता शुक्लोवर्ण सप्तानां व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवशिष्ठकश्यपा ऋषयोऽग्निवायुसूर्यवृहस्पतिवरुणेन्द्रविश्वेदेवा देवता गायत्र्युष्णिगनुष्टुब्बृहति-पंक्तित्रिष्टुब्जगत्यश्छन्दांसि तत्सवितुरित्यस्य विश्वामित्रऋषिः सविता देवता आपोज्योतिरित्यस्य प्रजापतिऋषिर्ब्रह्माग्निर्वायुसूर्या देवता यजुश्छन्दः सर्वेषां प्राणायामे विनियोगः ॥

**ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ॐ तत्सवितुर्वरेण्यं ॐ भर्गो देवस्य धीमहि ।**
**ॐ धियो यो नः प्रचोदयात् ॐ आपोज्योतिरसोमृतं ब्रह्मभूर्भुवः । स्वरोम् ।**

इति पूरकं कृत्वा, एवं प्रकारेण कुम्भकं रेचकञ्चकुर्यात् ॥

## प्रातः काले

सूर्यश्चमेति ब्रह्माऋषिः प्रकृतिश्छन्दः सूर्यो देवता अपामुपस्पर्शने विनियोगः।

**

**ॐ सूर्यश्चमा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् ।**

**यद्रात्र्यापापमकार्षम्मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना।**

**रात्रिस्तदवलुम्पतु यत्किञ्चिदुरितं मयि इदमहं माममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा ॥**

मध्याह्नकाले

**आदौ विनियोगः**

आपः पुनन्त्विति विष्णुऋषिरनुष्टुप्छन्द आपो देवता अपामुपस्पर्शने विनियोगः ॥

**

**ॐ आपः पुनन्तुपृथिवीपृथ्वी पूता पुनन्तु माम् ।**

**पुनन्तु ब्रमणस्पतिर्ब्रह्म पूता पुनन्तु माम् ।**

**यदुच्छिष्टमभोज्यञ्च यद्वा दुश्चरितं मम ।**

**सर्वम्पुनन्तुमामापोऽसताञ्चप्रतिग्रह गुं स्वाहा ॥**

सायंकाले

## आदौ विनियोगः

ॐ अग्निश्चमेति मन्त्रस्य रुद्रऋषिः प्रकृतिश्छन्दोऽग्निर्देवता अपामुपस्पर्शने विनियोगः।

****

**ॐ अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् ।**

**यदह्ना पापमकार्षम्मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना।**

**अहस्तदवलुम्पतु यत्किञ्चिद्दुरितं मयि ।**

**इदमहं माममृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥**

पवित्रं गृहीत्वा आत्मानं जलं प्रोक्षयेत्

**ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥**

**तस्य ते पवित्रपते पवित्र पूतस्य यत्काम पुने तच्छकेयम् ॥**

वक्ष्यमाण माण मन्त्रेण मूलमन्त्रमुच्चारयजलं परिक्रामयेत्

**ॐ अपसर्पन्तु ये भूता ये भूता भूमिसंस्थिताः।**

**ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥**

ततो मार्जयेत्

**ॐ भूः पुनातु शिरसि ॐ भुवः पुनातु नेत्रयोः ॐ स्वः पुनातु कण्ठे ॐ महः पुनातु हृदये ॐ जनः पुनातु नाभ्याम् ॐ तपः पुनातु पादयोः ॐ सत्यं पुनातु पुनः शिरसि ॐ खं ब्रह्म पुनातु सर्वत्र ॥**

पुनश्च मार्जनम्

**विनियोगः**

आपोहिष्ठेत्यादित्र्यचस्य सिन्धुद्वीपर्षियत्रीछन्द आपोदेवता मार्जने विनियोगः ॥

***

**ॐ आपोहिष्ठामयोभुवः इति मस्तके ।**

**ॐ तान ऊर्जे दधातनः इति भूमौ ।**

**ॐ महेरणाय चक्षस इति हृदये ।**

**ॐ योवः शिवतमोरस इति हृदये।**

**ॐ तस्य भाजयतेहनः इति भूमौ ।**

**ॐ उशतीरिव मातरः इति मस्तके ।**

**ॐ तस्मा अरङ्ग मामवः इति मस्तके ।**

**ॐ यस्य क्षयाय जिन्वथः इति हृदये ।**

**ॐ आपो जनयथाचनः इति भूमौ ।**

ततः विनियोगं कुर्यात्

**विनियोगः**

द्रुपदादिवेत्येतस्य कोकिलराजपुत्र ऋषिरापो देवता अनुष्टुप्छन्द् मार्जने विनियोगः ।

*****

वामहस्ते जलं संस्थाप्य दक्षिणहस्तेन पिधाय मन्त्रं पठित्वा माजयेत्।

**ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिवः ।**

**पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥**

**विनियोगः**

ऋतं त सत्यं चेतस्याघमर्षण ऋषिर्भावभृतोदेवता अनुष्टुप्छन्दाऽघमर्षणे विनियोगः ।

*****

दक्षिणहस्तस्थजलं नासिका समीपं नीत्वा मन्त्रं पठित्वा दर्शनं विनैव वामभागे क्षिपेत् ।

**ॐ ऋतं च सत्यं चाभीद्धा तपसोऽध्यजायत ।**

**ततो रात्र्यजायत ततः समुद्रोऽअर्णवः ।**

**समुद्रादर्णवादधि संवत्सरोऽअजायत।**

**अहोरात्राणि विधदद्विश्वस्य मिषतो वशी।**

**सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।**

**दिवञ्च पृथिवीञ्चान्तरिक्षमथोस्वः ॥**

ततः विनियोगं कुर्यात्

**विनियोगः**

अन्तश्चरसीति तिरश्चीनऋषिरनुष्टुप्छन्दरापो देवता अपामुपस्पर्शने विनियोगः।

**

निम्नमन्त्रं पठित्वा जलाचमनं कुर्यात्

**ॐ अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ।**

**त्वं यज्ञस्त्वं वषट्कार आपो ज्योति रसोमृतम्॥**

ततः विनियोगं कुर्यात्

**विनियोगः**

ॐ भूर्भुवः स्वरिति महाव्याहृतीनां परमेष्ठी प्रजापतिऋषिः अग्निवायुसूर्यादेवता गायत्र्युष्णिगनुष्टुभश्छन्दांसि ॐ तत्सवितुरित्यस्य विश्वामि
ऋषिः सविता देवता गायत्री छन्दः ॐ अस्य श्रीमदष्टाक्षरमहामंत्रराजस्य बदरीकाश्रमनिवासी सर्वान्तर्यामी

श्रीमन्नारायाणऋषिर्देवीगायत्रीछन्दः परमात्मा श्रीमन्नारायणो देवता आं बीजं आय शक्तिः श्रीं कीलकं ह्रीं कवचं क्रौं अस्त्राय फट् ईं प्राणः शुक्लो वर्ण उदात्तः स्वरः श्रीवैकुण्ठक्षेत्रं प्राप्यं श्रीविष्णुपरमात्मजीवात्मनोः स्वः स्वामिभावः सम्बन्धः श्रीसवितृमण्डलवर्ती नारायणप्रीत्यर्थेऽर्घ्यदाने विनियोगः।

*****

मूलेन संपुटीकृत्य गायत्रीमन्त्रेण त्रिबारं सूर्यनारायणाय अर्घ्यं ददातु ।

अथवा

वक्ष्यमाणमन्त्रेण चतुर्थवारं दद्यात् ।

**ॐ आकृष्णेन रजसावर्तमानो निवेशयन्मृतं मर्त्यञ्च ।**

**हिरण्ययेन सविता रथेन देवो याति भुवनानि पश्यन् ।**

**विनियोगः**

उद्वयमुदुत्यमिति द्वयोः प्रस्कण्वऋषिः सूर्यो देवता अनुष्टुप्छन्दः चित्रन्देवानामित्यस्य कुत्साङ्गिरस ऋषिः सूर्योदेवता त्रिष्टुप्छन्दः तच्चक्षुरित्यस्य दध्यङ्ङाथर्वण ऋषिः सूर्यो देवता उष्णिक् छन्दः सूर्योपस्थाने विनियोगः

*****

ततो हस्तौ उपरिकृत्य सूर्याभिमुखो भूत्वा

मन्त्रं पठेत्

**ॐ उद्वयन्तमसस्प्परिस्वः पश्यन्त उत्तरम् देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥**

**ॐ उदुत्यञ्जातवेदसन्देवं व्वहन्ति केतवः दृशे विश्श्वाय सूर्यम् ॥**

**ॐ चित्रन्देवानामुदगादनीकञ्चक्षुर्मित्त्रस्य व्वरुणस्याग्नेः ।**

**आप्राद्यावा पृथिवीऽअन्तरिक्ष ७ सूर्य आत्मा जगतस्तस्त्थुषश्च ॥**

व्याघ्रचक्षुषमुद्रयात्र सूर्यमण्डलवर्तिं नारायणं पश्यन्ति

**ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्।**

**पश्येमशरदः शतञ्जीवेमशरदः शत ७ श्रृणुयामशरदः शतं प्रब्रवामशरदः शतमदीनाः ।**

**स्यामशरदः शतम्भूयश्च शरदः शतात् ।**

ततो हस्तौ सम्पुटीकृत्य अर्थानुसन्ध्यानं कुर्वन्पठेत्

**ॐ हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।**

**तत्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥**

**ॐ पूषन्नेकर्षे यमसूर्यप्राजापत्य व्यूहरस्मीन् समूहतेजोयत्ते रूपं**

**कल्याणतमं तत्ते पश्यामि योसावसौ पुरुषः सोहमस्मि ॥**

**ॐ वायुरनिलममृतमथेदं भस्मान्त ७ शरीरम्**

**ॐ क्रतोश्मर क्लीबेश्मर कृत ७ श्मर ॥**

**ॐ अग्नेनय सुपथाराये अस्मान् विश्वानि देवव्वयुनानि विद्वान् ।**

**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम ॥**

अत्र द्विवारं विष्णुगायत्रीं जपेत्

**ॐ नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णु प्रचोदयात् ।**

ततः सूर्यन्नमस्कुयात्

**ॐ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।**

**संबाहूभ्यान्धमति संपतत्रैर्द्यावाभूमिं जनयन्देव एकः ।**

आसने स्थित्वा आचम्य न्यासं कुर्यात्

## करन्यासः

ॐ भूः अङ्गुष्ठाभ्यां नमः। ॐ भुवः तर्जनीभ्यां नमः ।

ॐ स्वः मध्यमाभ्यां नमः ।

ॐ तत्सवितुर्वरेण्यं अनामिकाभ्यां नमः ।

ॐ भर्गो देवस्य धीमहि । कनिष्ठिकाभ्यां नमः ।

ॐ धियो यो नः प्रचोदयात् करतलकरपृष्ठाभ्यां नमः ।

## ततोऽङ्गन्यासः

ॐ भूः ज्ञानाय हृदयाय नमः । ॐ भुवः ऐश्वर्याय शिरसे स्वाहा ।

ॐ स्वः शक्त्यै शिखायै वषट् । ॐ तत्सवितुर्वरेण्यं बलाय कवचाय हुम् ।

ॐ भर्गो देवस्य धीमहि तेजसे नेत्राभ्यां वौषट् । ॐ धियो यो नः प्रचोदयात् अस्त्रायफट् ॥

## करन्यासः

ॐ ॐ अङ्गुष्ठाभ्यां नमः ॐ नं तर्जनीभ्यां नमः ।

ॐ मों मध्यमाभ्यां नमः । ॐ नां अनामिकाभ्यां नमः

ॐ रां कनिष्ठिकाभ्यां नमः ॐ यं करतलकरपृष्ठाभ्यां नमः

ॐ णां दक्षिणनखेषु ।ॐ यं वामनखेषु ।

**अङ्गन्यासः**

ॐ ॐ ज्ञानाय हृदयाय नमः । ॐ नं ऐश्वर्याय शिरसे स्वाहा ।

ॐ मों शक्त्यै शिखायै वषट् । ॐ नां बलाय कवचाय हुम् ।

ॐ रां तेजसे नेत्राभ्यां वौषट् । ॐ यं वीर्याय अस्त्राय फट् ।

ॐ णां उदरे। ॐ यं पृष्ठे ॥

## गायत्र्यावाहनम्

**विनियोगः**

तेजोसिरित्यस्य परमेष्ठी प्रजापति ऋषिः शुक्रो देवता जगतीछन्दः । यजुर्गायत्र्यावाहने विनियोगः ।

*****

आवाहनमुद्रया गायत्रीं आवाहयेत्

**ॐ तेजोसि शुक्रमस्यमृतमसि धामनामासि प्रियन्देवाना मना धृष्टृन्देव यजनमसि ॥**

गायत्रीप्रार्थना

**बहुरूपिणि गायत्रि दिव्ये सन्ध्ये सरस्वति ।**
**अजरे अमरे देवि ब्रह्मयोने नमोस्तु ते॥**

**ब्रह्मशापाद्विमुक्ता भव । वशिष्ठशापाद्विमुक्ता भव । विश्वामित्र शापाद्विमुक्ता भव ।**

ततश्चतुर्विंशति मुद्रा करणम्

**सुमुखं संपुटं चैव विततं विस्तृतं तथा।**

**द्विमुखं तृमुखं चैव चतुः पञ्चमुखं तथा ।**

**षण्मुखाधोमुखौ चैव व्यापकाञ्जलिकं तथा ।**

**शकटं यमपाशं च ग्रथितं चोल्मुखोल्मखम् ।**

**प्रलम्बं मुष्ठिकं चैव मत्स्य कूर्म वराहकम् ।**

**सिंहक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा ॥**

ॐ अस्य श्रीमदष्टाक्षरमहामन्त्रराजस्य श्रीबदरीका श्रमनिवासी सर्वान्तर्यामी श्रीमन्नारायणऋषिः देवीगायत्री छन्दः परमात्मा श्रीमन्नारायणो देवता आं बीजं आयशक्ति श्री कीलकं ह्रीं कवचं क्रौं अस्त्रायफट ईं प्राणः शुक्लो वर्ण उदात्तः स्वरः श्रीविष्णुपरमात्मजीवात्मनोः स्वः स्वामिभावः सम्बन्धः ओंकारस्य ब्रह्माऋषिर्गायत्र्युष्णिगनुष्टुप्छन्दांस्यग्निवाय्वादित्यादेवताः तत्सवितुरित्यस्य विश्वामित्रऋषिः सविता देवता भगवत्कैकर्यरूपेण साष्टाक्षर सव्याहृतीक गायत्रीमन्त्रजपे विनियोगः

मूलेन संपुटीकृत्य अर्थानुसंधानपूर्वकं सव्याहृतीकां गायत्रीं जपेत् ।

जपान्ते

**यस्य स्मृत्या च नामोक्त्या तपो यज्ञ क्रियादिषु**

**न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥**

हस्ते जलं गृहित्वा इत्यनेन भूमौ जलं त्यजेत्

जपं समाप्यात्र गुरुपरम्परादिकं पाठं कुर्यात्

**कायेन वाचा मनसेन्द्रियैर्वा**
**बुद्ध्यात्मना वा प्रकृतेः स्वभावात् ।**
**कायेन वाचा मनसेन्द्रियैर्वा**
**बुद्ध्यात्मना वा प्रकृतेः स्वभावात् ॥**

सर्वं श्रीकृष्णार्पणमस्तु

हरिः ॐ तत्सत्

Edit